Nāgeśabhaṭṭa

नागेशभट्टकृतः

# परिभाषेन्दुशेखरः

महामहोपाध्यायश्रीजयदेवशर्म्ममिश्रविरचितया

विजयाख्यव्याख्यया

Vijayā

समलङ्कृतः

Paribhāṣendu-śekhara

तदात्मजेन प्रयागविश्वविद्यालयसंस्कृताध्यापकेन
एम्० ए०, डि० लिट्०, काव्यतीर्थोपाधि-
भूषितेन श्रीमदुमेशमिश्रशर्म्मणा
संशोध्य प्रकाशितः








दी इलाहाबाद लॉ जर्नल प्रेस
इलाहाबाद
१९४१

# विषयानुक्रमणिका

पृष्ठसंख्या

पृष्ठसंख्या

पृष्ठसंख्या

पृष्ठसंख्या



---

# आमुखम्

अद्य खलु श्री१०८काशीविश्वनाथस्यानुकम्पया तातपादविरचितायाः परिभाषेन्दुशेखरस्य **विजया**टीकायाः परिशोधितं कुत्रचिट्टिपण्यादिभिः परिवर्द्धितं तृतीयं संस्करणं सहृदयानां विपश्चितां पुरतः संस्थाप्यते। शास्त्रीयालौकिकचमत्कारशीलानां शास्त्रमर्मज्ञानां तत्त्वैकदृशां पितृचरणसदृशानां विदुषां ग्रन्थस्य संशोधने महानवकाशः सम्भाव्यते प्रमादस्य विशेषतोऽस्मत्सदृशानां शास्त्रमर्मानभिज्ञानां कृते। अतो यद्यपि पूर्वसंस्करणानुरोधेन यत्र तत्र संशोधनं कृतं तथाऽपि तेषां संशोधितस्थलानां तथ्यातथ्यविषये विद्वांस एव पुनः प्रमाणमिति।

अतः परं यत् किञ्चित् प्रस्तूयते शास्त्रमर्मज्ञानां विनोदाय। तत्र विदितमेतत् सर्वेषां पण्डितप्रवराणां यत्सर्वेष्वपि व्याकरणेषु प्राधान्यं पाणिनीयव्याकरणस्यैव। तथा चोक्तं भगवता पतञ्जलिना महाभाष्यकारेण 'पूर्वापरप्रथमचरमेत्यादि'सूत्रे भाष्ये—'सर्ववेदपारिषदं ह्रीदं शास्त्रम्'। व्यासेनापि कथितम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

सन्ति च तत्र बहूनि व्याकरणानि। पाणिनिनैव अष्टाध्यायीतिसंज्ञके व्याकरणसूत्रग्रन्थे शाकल्य—आपिशलि—शाकटायन—आङ्गिरस—स्फोटायन—गालव—भारद्वाज—गार्ग्य—काश्यप—चाक्रवर्मण-सेनकादीनां उदीचां प्राचामित्यादीनाञ्च प्राचीनव्याकरणाचार्याणां नामोल्लेखः कृतः। पाणिनेः पूर्वमपि व्याकरणान्तराण्यासन्नित्यनेन ज्ञायते। अन्येषामप्याचार्याणां व्याकरणान्तराणि सन्ति। तद्यथा—चान्द्रं, शाकटायनं, हैमं, कातन्त्रं, सारस्वतं, वोपदेवं, कौमारं, सौपद्मं, कालापं, ऐन्द्रं, शौर्ग्यं, ब्राह्मं, याम्यं, वायव्यं, वारुणं, सौम्यं, वैष्णवं, रौद्रं, सौरं तथा जैनेन्द्रम्। एतेषां सर्वेषां व्याकरणान्तराणां ग्रन्था यद्यप्यधुना सर्वथा नोपलभ्यन्ते परन्तु एतेषामखिलानामस्तित्वे नास्ति सन्देहलेशोऽपीति सप्तदशख्रिस्ताब्दीयश्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां काशीस्थव्याकरणशास्त्रसूचीपत्रादवगम्यते। पाणिनीयातिरिक्तान्यपि कानिचिद्व्याकरणानि सौकर्यार्थं केषुचित्प्रान्तेषु पठचन्ते किन्तु न तेषां पण्डितसमाजे तादृशः समादरो न वा एतेषु व्याकरणेषु बहवः प्रकरणग्रन्थाः सन्ति। अत एव पाणिनीयस्यैव व्याकरणस्य

महत्त्वं सर्वत्र स्वीक्रियते। अस्यैवानवच्छिन्ना पठनपाठनपरम्परा आ पाणिनेः समागता। पाणिनीयसूत्राण्यवलम्ब्य परःसहस्रं ग्रन्था रचिता अध्ययनाध्यापन-प्रणाल्यामद्यापि प्रसिद्धाः। किं बहुना पाणिनीयव्याकरणाध्ययनमेव विदुषां समाजे व्याकरणाध्ययनमित्युच्यते। ये केचन विशिष्टा विद्वांसो भारतवर्षे ज्ञानिनां शिरोमुकुटायमाणास्ते प्रायः सर्वेऽपि प्रधानतया पाणिनीयव्याकरणनिष्णाता एवेति श्रूयते। संस्कृतविद्याप्रधानान्यतमकेन्द्रीभूतायां काश्यामपि तेषामेवाधिपत्यं पण्डितमण्डलीषु येषां पाणिनीये व्याकरणे सर्वापेक्षया प्रगाढपाण्डित्यम्। ईदृशी शास्त्रस्यास्य प्रतिष्ठा गुरुपरम्परातः श्रूयते।

तत्रादौ भगवान् पाणिनिः शास्त्रमिदं सूत्ररूपेण जग्रन्थ। पाणिनीयसूत्राणि च चतुर्दशभ्यो माहेश्वरसूत्रेभ्य आगतानीति विदितमेव सर्वेषाम्। माहेश्वरसूत्राणाञ्च नन्दिकेश्वरकृता काशिकाख्या कारिकासु व्याख्या वरीवर्ति। सैव वस्तुतः शिवसूत्राणां यथार्थस्वरूपं व्याकरणशास्त्रस्य च मुख्यं प्रयोजनं जगदादितत्त्वाविर्भावादि-प्रकारञ्च निरूपयन्ती क्रमेण ब्रह्मस्वरूपमपि प्रतिपादयति। अतः परं क्रमशः पाणिनीयसूत्राणां सूक्ष्मेक्षिकया तत्त्वविवेचनं व्याडिकात्यायनपतञ्जलिप्रभृतिभिः पूर्वाचार्यैः स्वस्वव्याख्यासु कृतम्। तदनु योगिवरभर्तृहरिप्रमुखैरपि विविधाष्टीका निर्मिताः। एते सर्वे प्रायः शास्त्रस्य मुख्योद्देश्यमेव मनसिकृत्य सूत्राणां तेषां विविधव्याख्यानाञ्च समालोचनं सरलरीत्यैव विहितम्। परन्तु एतावता कालेन शास्त्रलेखनशैलीषु महत्परिवर्तनं जातम्। तत्रादौ दर्शनशास्त्राणां विशेषतो न्यायशास्त्रस्य नव्यपरिपाटीमुखेन मिथिलानवद्वीपकाशीप्रभृतिषु विद्याकेन्द्रेषु विचारः प्रवर्त्तितः। अनया नवीनलेखनप्रणाल्या दर्शनातिरिक्तान्यपि शास्त्राणि प्रभावितानि। व्याकरणेऽपि अस्याः प्रभावो महान् बभूव। काशीमरणान्मुक्ति-रिति निश्चित्य विपश्चितः संसारबन्धनान्मुक्तिमुपलिप्सवो न केवलं चरमे वयसि अपि तु युवावस्थायामेव भगवतः काशीविश्वेश्वरस्य मणिकर्णिकातीर्थस्य च सेवाभिः सहैव विद्योपार्जनाय नानादिग्देशेभ्यः काशीमागत्य वसन्ति स्म। पूर्वतनकाला-दारभ्याद्यपर्य्यन्तमपि मोक्षार्थिभिर्विद्यार्थिभिश्चेत्थं विश्वनाथपुरी सुसम्पन्ना विद्यते। यद्यपि चिरकालादेवेदृशी प्रतिष्ठा विश्वेश्वरनगरस्यासीत् किन्तु प्राचीनकालि-केतिहासस्यान्धकाराच्छन्नेन हेतुना तत्कालीनायाः परिस्थितेः विशेषज्ञानाभावो वर्त्तते। मध्ययुगे पुनः यवनराज्यकाले नगरोऽयं विद्यागौरवे महतीं प्रतिष्ठामापेति बहुभिः प्रमाणैर्ज्ञायते, नास्त्यत्र संशयलेशोऽपि। अत एव दाक्षिणात्या मैथिला वङ्गीयाः सारस्वता बहवो विद्वांसः काश्यामेवाधिवसन्ति स्म।

अतः कालक्रमेण विश्वनाथनगरी एव विद्यानां विविधकलानाञ्च प्रधानकेन्द्र-भूता काशते स्म। अत एव दाक्षिणात्या दीक्षितवंशजाः सर्वेऽपि प्रायः काशीमागत्य

स्वनिवासं चक्रुः। तदनु श्रीमता भट्टोजिदीक्षितेन क्रमशः सिद्धान्तकौमुद्यां प्रौढ़मनोरमायां शब्दकौस्तुभादिग्रन्थेषु च पाणिनीयसूत्राणां तद्व्याख्यानानाञ्च नव्यन्यायप्रभावितनवीनविवेचनप्रकारः प्रदर्शितः। अनेन विवेचनप्रकारेण शास्त्रेऽस्मिन् कश्चिन्नूतनः संस्कारो जातः। शास्त्रमर्मरसिका विद्वांसोऽधुना अपूर्वमानन्दमनुभवन्तः स्वस्ववैदुष्यमहिमानं विशेषेण प्रदर्शितवन्तः। तामेव परिपाटीमनुसरन्तः प्रयागादुत्तरे शृङ्गवेरपुरे वसतो रामनृपाल्लब्धजीविकाः श्रीमन्तो नागेशभट्टाः काश्यामेव विविधशास्त्रेषु विशेषतो व्याकरणे बहून् ग्रन्थान् व्यरचयन्। एतेषामेव ग्रन्थेषु अधुनाऽपि पाणिनीयशास्त्रतत्त्वं विराजते। अतो विद्यार्थिनां ज्ञानिनाञ्च शिरोमुकुटायमाणा विशेषरूपेण नागेशभट्टानामेव ग्रन्थाः सन्ति।

तदनु एतेषामेव शिष्यो गदा—छाया-कला—प्रभा—भावप्रकाशिकादीनां व्याकरणव्याख्यानरूपग्रन्थानां प्रणेता वेणीमहादेवसुतः पायगुण्डापरनामको वैद्यनाथो बभूव। न केवलं व्याकरणेऽपि तु धर्मशास्त्रेऽपि अस्य कृतयः सन्ति। एवं शिष्यपरम्पराक्रमेण काशी एव प्रायः पाणिनीयव्याकरणस्यापि प्रधानकेन्द्रो बभूव।

एतेषामेव गुरुशिष्यपरम्परायां काशीस्थपण्डितसमाजप्रसिद्धाः श्रीमन्तो राजारामशास्त्रिचरणा जाताः। तेषां पुनः प्रधानशिष्यवराः प्रातःस्मरणीया बालशास्त्रिण आसन्। येषां लोकोत्तरवैदुष्यमहिमानं श्रुत्वा नानादेशस्था विद्वांसोऽपि काशीमागत्य तेभ्यः एवाधीत्य स्वशास्त्रेषु नैपुण्यमापुः। तत्र तावत् दाक्षिणात्येषु गङ्गाधरशास्त्रि-दामोदरशास्त्रि-रामकृष्णशास्त्रिचरणाः, संयुक्तप्रान्तीयेषु शिवकुमारमिश्रपादाः, मैथिलेषु तातचरणाः श्रीमन्तो जयदेवमिश्राः एव प्रधानशिष्या आसन्। प्रायः सर्वे एते पाणिनीयव्याकरणे प्रकाण्डवैदुष्यं सम्प्राप्य काश्यामेवाजीवमध्ययनाध्यापनादिकं सम्पादयन्तो गुरुपरम्परागतशास्त्रतत्त्वगूढ़विवेचनरक्षणार्थं ग्रन्थांश्च विरचयामासुः। एभिर्विरचितानेव ग्रन्थान् पठित्वाऽधुना संस्कृतविद्यानुरागिणः शास्त्रमर्मज्ञा भवन्ति।

एवं श्रीमद्भिर्भट्टोजिदीक्षितैः समारब्धा समये समये नागेशादीनां विचारपरम्पराभिः सम्बर्धिता बालशास्त्रि—दामोदरशास्त्रि—शिवकुमारमिश्रशास्त्रिभिः परिपोषिता जयदेवमिश्रचरणैः पल्लविता परां काष्ठां प्रापिता शास्त्रमर्मोद्घाटिनी नव्यन्यायपरिबृंहिता **परिष्कारेति** नाम्ना पण्डितमण्डलीषु प्रसिद्धा शास्त्रानुशीलनपरिपाटी न केवलं काशीक्षेत्रस्यापि तु समग्रभारतवर्षस्य विद्यागौरवं परिपालयतीति।

इत्थं सामान्यरूपेण पाणिनीयव्याकरणस्य गुरुशिष्यपरम्परां प्रदर्शयता विद्यासु तस्य महिमानं निरूपयताधुना सम्पादितविजयासहितपरिभाषेन्दुशेखरग्रन्थमधिकृत्य किमप्युच्यते।

परिभाषेन्दुशेखरो नाम ग्रन्थो व्याकरणपरिभाषारूपग्रन्थस्यैका सुप्रसिद्धा व्याख्या। परिभाषारूपग्रन्थः शास्त्रव्युत्पादनाय वैयाकरणानां सिद्धान्तस्वरूपो व्याकरणशास्त्रविषयकविविधन्यायानां संग्रहरूपो ग्रन्थः। एता न्यायरूपाः परिभाषाः मुख्यतया कात्यायनपतञ्जलिप्रमुखानां व्याकरणशास्त्राचार्याणां ग्रन्थेभ्य उद्धृत्य सङ्कलिताः। क्वचित्तु परिभाषामूलं निरूपयता नागेशेन महेश्वरस्य वाक्यादपि कस्याश्चित्परिभाषाया उत्पत्तिः सूचिता। तद्यथा "व्याख्यानाच्च द्विरुक्तितः" इति वार्त्तिकव्याख्याने यत्पतञ्जलिना—'एतज्ज्ञापयति आचार्यो भवत्येषा परिभाषा—व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति' व्याख्यातं तत्र 'आचार्य'पदेन 'शिव' एव नागेशेन गृहीत उद्योते। एतत्सर्वं नागेशेनैव परिभाषेन्दुशेखरप्रारम्भे एव निगदितम्—'प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानी'त्यादिग्रन्थसन्दर्भेण। "विजयाकारेण" तु व्याकरणपरिभाषापदार्थः क इत्यत्र 'अप्रामाण्यज्ञानानास्कन्दित-साधुत्वप्रकारकबोधोपयोगिबोधजनकत्वं परिभाषात्व'मित्युक्तम्। तदनन्तरं माहेश्वरोच्चरितानुबन्धमूलकत्वमपि कस्याश्चित् परिभाषायाः स्वीकृतन्तत्रैव। एताः सर्वाः परिभाषाः व्याकरणमहाभाष्ये सोदाहरणं पतञ्जलिना समुपबृंहिता इत्यपि तत्तत्परिभाषाव्याख्यासु श्रीमता नागेशेनैव सूचितम्।

एतासां परिभाषाणां सङ्कलनं प्रायः धातुपाठादिसङ्कलनकाले एव जातम्। ततः कालक्रमेण परिभाषाणां दुरवबोधतया काचिद् व्याख्याऽपेक्षिता। तत्र तावत् श्रीमता सीरदेवेन संक्षिप्तो नातिसरलः 'परिभाषावृत्ति'नामको व्याख्यानरूपो ग्रन्थो रचितः किन्तु नानेन विद्यार्थिनां जिज्ञासूनां सन्तोषः समजायतेति मनसि निश्चित्य नागेशेनैतासां नव्यन्यायशैलीमुखेन विस्तृता व्याख्या परिभाषेन्दुशेखरेति-नाम्नी कृता। अस्य मूलभूतो ग्रन्थः परिभाषावृत्तिरस्तीति पण्डितमण्डलीषु यद्यपि प्रसिद्धिरस्ति किन्तु नागेशेन न कुत्रचिदस्या वृत्तेः चर्चापि कृता। अधुना पठनपाठन-प्रणाल्यां परिभाषेन्दुशेखर एव सर्वत्र विराजते।

अस्मिन् ग्रन्थे त्रीणि प्रकरणानि सन्ति—शास्त्रत्वसम्पादकम्, बाधबीज-कथनम्, शेषार्थकथनञ्च। 'एकदेशविकृतमनन्यवदि'–(३८)–ति परिभाषान्त-माद्यम्। तदनु 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' (७१) इतिपरिभाषान्तं द्वितीयम्। एतदनन्तरं तृतीयं प्रकरणम्। अनेनैव क्रमेण तातचरणैर्विजयायां व्याख्यातो ग्रन्थः। क्रमशः परिभाषेन्दुशेखरस्यापि व्याख्या अपेक्षिता बभूव। सन्ति तत्र शाङ्करी, श्रीधरी, त्रिपथगा, मनुदेवी, चन्द्रिका, भूत्यादिका विविधाष्टीकाः किन्तु परिष्कारपिपासूनां शास्त्रमर्मजिज्ञासूनां नागेशग्रन्थतत्त्वाभिलिप्सूनां विद्यार्थिनां विपश्चिताञ्च कृते नैताः पूर्णसन्तोषप्रदाः। न चैतासु शास्त्रार्थपरिष्कारप्रणाल्याः

तत्तत्कोटिभेदेन कुत्रचित् परम्परोपलभ्यते। इत्यादिविविधविषयाभावं प्राचीनटीकासु दृष्ट्वा तातचरणै**र्विजया**नाम्नी अपरैका व्याख्या निर्मिता प्रकाशिता च। सा चाधुना लेखसौष्ठवेन, सरलसरसमुखेन पदार्थानां प्रतिपादनेन, अपदार्थनिराकरणेन, नागेशाभिप्रायं सुस्पष्टं समुद्घाटनेन सर्वत्र विजयतेतरामिति विदुषां परामर्शः। शास्त्रार्थपरिपाटी परिष्कारचर्चा चेमामेव **विजया**मवलम्ब्याधुनाऽपि जगति विपश्चितां यशोडिण्डिमरूपेण विराजेते।

अतः परं ग्रन्थकर्त्तुष्टीकाकर्त्तुश्च संक्षिप्तं जीवनवृत्तान्तमपि छात्राणां विनोदाय विलिख्यते।

तत्र तावत् शिवभट्टसुतः सतीदेव्यास्तु गर्भजो नागेशापरनामको नागोजिभट्टः परिभाषेन्दुशेखरस्य रचयिता आसीत्। अयं सिद्धान्तकौमुदीकारस्य भट्टोजिदीक्षितस्य पौत्रस्य हरिदीक्षितस्य प्रसिद्धतमः शिष्यः। यद्यपि महाराष्ट्रदेशोऽनेन जन्मनाऽलंकृतः किन्तु यतोऽस्य गुरुवरास्तेषां पूर्वजाश्च काश्यामेव कृतवसतयोऽतोऽयमपि विश्वेश्वरनगर्यामेव क्षेत्रन्यासरूपेण निवसन् शतशश्छात्रानध्यापयन् ग्रन्थांश्च विरचयन् स्वकालं यापयामास।

कदा भारतवर्षं स्वजन्मना भूषितवानयमिति विचार्य्यमाणे एतदेवालं यदयं पण्डितराजजगन्नाथरचितरसगङ्गाधरग्रन्थस्य मर्मप्रकाशनामकटीकायाः रचयिता बभूव। पण्डितराजस्तु दिल्लीश्वरस्य यवनाधिपतेः शाहजहांनामकस्य संसदि सम्प्राप्य स्वविद्याचमत्कारप्रदर्शनफलस्वरूपां 'पण्डितराज'पदवीं तस्मादेव लब्धवान्। शाहजहांमहीपतेः राज्यसमयः १६२८-१६५८ खिस्ताब्दः आसीदितीतिहासविदां परामर्शः। स एव पण्डितराजस्यापि जीवनकालस्तत्पश्चाद्वर्ती नागेशः। अन्यच्च पण्डितराजो नागेशस्य गुरोः पितुः भानुदीक्षितस्य समकालिक आसीदतः पण्डितराजात् प्रायः पञ्चाशद्वर्षाणि पश्चान्नागेशः समभूदिति मत्वा अष्टादशशताब्दस्य प्रारम्भकाले तेन स्वजन्मना दक्षिणदेशोऽलंकृत इति निश्चीयते। अपरं चात्र प्रमाणं किंवदन्तीरूपेण श्रूयते यत् जयपुराधिपतिस्तदानीन्तनः श्रीसवाई जयसिंहवर्माऽश्वमेधयज्ञप्रसङ्गे नागेशभट्टायामन्त्रणं प्रेषितवान्। तत्पत्रं प्राप्य नागेशेन—अहं क्षेत्रसंन्यासं गृहीत्वा काश्यां स्थितोऽस्मि अतः काशीम् परित्यज्य नान्यत्र गन्तुं शक्नोमीति—प्रत्युत्तरं प्रहितम्। एष महाराजः १७१४ खिस्ताब्दे अश्वमेधयज्ञसम्भारं कृतवानिति महामहोपाध्यायदुर्गाप्रसादशर्मणो लेखादवगम्यते। एतस्मादपि अष्टादशशताब्दस्य प्रारम्भकाले नागेशभट्टस्य जन्मकालः समायाति।

अस्य पोषकः शृङ्गवेरपुराधीशो विसेनवंशजो रामनृपतिर्नागेशशिष्यो बभूव। तस्मादेव लब्धजीविको नागेशः। एतावानेवास्य जीवनवृत्तान्तो लभ्यते। अनेन बहवो ग्रन्था रचिता येषु निम्नलिखिता अद्यतनेऽप्युपलभ्यन्ते। तद्यथा (१)

भाष्यप्रदीपोद्योतः, (२) काव्यप्रदीपोद्योतः, (३) लघुशब्देन्दुशेखरः, (४) बृहच्छब्देन्दुशेखरः, (५) परमलघुमञ्जूषा, (६) लघुमंजूषा, (७) बृहन्मञ्जूषा, (८) परिभाषेन्दुशेखरः, (९) प्रायश्चित्तेन्दुशेखरः, (१०) परमार्थसारविवरणम्, (११) योगसूत्रवृत्तिः, (१२) दुर्गासप्तशतीटीका, (१३) रसगङ्गाधरमर्मप्रकाशः, (१४) रसतरङ्गिणीटीका, (१५) रसमञ्जरीटीका, (१६) वृत्तिसंग्रहः, (१७) वेदान्तसूत्रवृत्तिः, (१८) सांख्यसूत्रवृत्तिः, (१९) सापिण्ड्यनिर्णयः, (२०) एकश्रुत्यवादः, (२१) वाल्मिकीयरामायणटीका, (२२) अध्यात्मरामायणटीका, (२३) शब्दरत्नञ्च ।

एतान् ग्रन्थान् विरचयन् शतशश्छात्रानध्यापयन् काशीवाससुखमनुभवन् स्वयशोभिर्दश दिशो धवलयन्नैहिककार्यं सुसम्पादयन् काश्यां तारकं जपन्नागेशो दिव्यलोकं जगामेति ।

परिभाषेन्दुशेखर**विजयाटीकाकाराः** स्वनामधन्याः महामहोपाध्यायाः प्रातःस्मरणीयाः श्री६जयदेवमिश्रशर्म्माणः । मिथिलाप्रदेशान्तर्गतगजहराग्रामः एतैः स्वजन्मनाऽलङ्कृतः । तातचरणाः रुद्राङ्कशशिसम्मिते (१९११) वैक्रमाब्दे कार्त्तिकशुक्लपूर्णिमायां सुप्रतिष्ठिते सोदरपुरश्रोत्रियमैथिलब्राह्मणकुले जन्म लेभिरे । एतेषां तातपादानां पितृचरणाः चित्रनाथशर्माणश्चतुर्षु सोदरेषु ज्येष्ठाः । तेऽपि चत्वारः सोदराः चित्रनाथपोषनभगवान्दत्तगणेशशर्म्माणः नानाशास्त्रेषु पण्डिता आसन् । तत्रापि पोषनशर्म्मा व्याकरणन्याय (शब्दखण्ड) धर्मशास्त्रादिष्वतिनिपुणो बृहत्कुटुम्बभारपोषको बभूव । माता चास्मद्गुरुवराणां शचीनाम्नी सर्वगृहकार्येष्वतिपट्वी एकाकिन्येव बृहत्कुटुम्बभारमाजीवं दधौ । तातपादानां मातृकुलेऽपि प्रायः सर्वे विशिष्टा विद्वांसो बभूवुः । तत्राप्येतेषां मातामहः कुलमणिशर्म्मा मातुलौ च श्रीमणिरत्नमणिशर्म्माणौ तदानीन्तनमिथिलाधीशप्रवर्त्तितपाण्डित्यपरिचायकधौतपरीक्षायां तत्तच्छास्त्रेषु लब्धप्रतिष्ठा आसन् । एते सर्वेऽपि बलिष्ठा दीर्घजीविनः काश्यां चरमे वयसि समागत्य मणिकर्णिकायां तारकं जपन्त ऐहिकशरीरं तत्यजुः ।

तातचरणाः षट्सु सोदरेषु ज्येष्ठाः । सोदरा चैतेषामेका सर्वज्येष्ठा । तत्र वासुदेवकेशवशर्म्माणौ ज्यौतिषशास्त्रे धर्मशास्त्रे तन्त्रशास्त्रे च विशिष्टविद्वांसौ जातौ । जनार्द्दनमुकुन्दशर्म्माणावल्पमेवाधीत्य गृहकार्ये एव संलग्नौ बभूवतुः । चतुर्थो मधुसूदनशर्मा तु लौकिकाखिलव्यवहाराचारगृहकार्यदक्षः प्रायो ज्यौतिषशास्त्रवर्जमन्येषु सर्वेषु शास्त्रेषु स्वज्येष्ठभ्रातुः सकाशादेवाधीत्याल्पे एव वयसि लब्धप्रकर्षपाण्डित्यो बड़ोदाधारेन्दौरादिविद्याकेन्द्रेषु शास्त्रमर्यादया स्वालौकिकयशः प्रख्यापयन् जम्बूकलिकातादिनगरेष्वध्याप्य पुनः काशीमागत्य दरभङ्गानरेश-

संस्थापितपाठशालायां शतशश्छात्रान् पाठयन् काशीस्थपण्डितमण्डलीषु च शास्त्रार्थ-चर्चासु लोकोत्तरवैदुष्यं प्रख्यापयन् भूनेत्ररत्नैकमिते (१९२१) ख्रिस्ताब्दे पञ्चपञ्चाशद्वर्षवयस्क एव काश्यामैहिकनश्वरं शरीरं विहाय विश्वेश्वरसायुज्यं प्राप्तवान् । तद्रचितानि मधुसूदनीतिसंज्ञकानि व्याकरणशब्दखण्डविषयकानि क्रोड-पत्राणि विदुषां समाजे प्रसिद्धानि तस्य दुर्द्धर्षवैदुष्यपरिचायकान्यद्यापि सन्त्येव । तत्समानकालिकेषु पण्डितेषु न कोऽपि तत्समः शास्त्रार्थविचारनिपुण आसीदिति तातचरणैर्बहुधोदीरितम् ।

महात्मनामेतेषां पितृव्यपुत्रा अपि नानाशास्त्रचणा आसन् । तत्रोल्लेखन-योग्यो भगवान्दत्तशर्म्मणः पुत्रो दामोदरशर्म्मा । स च खलु काव्यसाहित्येऽलौकिक-व्युत्पन्नो ज्यौतिषशास्त्रवैदुष्ये तु तत्समकालिकेषु प्रायः तत्तुल्योऽन्यो नैवासीदिति तस्य गुरुवरस्येदानीमपि काशीमलङ्कुर्वतः श्रीगेनालालचातुर्द्धुरीणशर्म्मणो मुखा-च्छ्रूयते । लौकिकविषयेष्वपि तस्य विचारचमत्कारः सर्वथा प्रशंसनीय एवासीत् । तद्विरचिता भास्कराचार्यरचितायाः लीलावत्याः 'वासना' तु विपश्चितां समाजे सर्वत्र प्रसिद्धैव । अन्येऽपि ज्यौतिषशास्त्रविषयका बहवो निबन्धास्तेन रचिताः । कालिकाकुशेश्वरादिदेवतानां स्तोत्राण्यपि बहूनि तेन निर्मितानि । एकदा नेपालं गत्वा तत्र स्वपाण्डित्यालौकिकचमत्कारेण सर्वविद्यावदातं राजगुरुं प्रसाद्य महती प्रतिष्ठा महद्धनञ्च तेनालम्भि । नेपालराजकीयजनकपुरपाठशालायां शतशश्छा-त्रानध्यापयन् दिशि दिशि पाण्डित्यं प्रकाशयन् कीर्तिञ्च धवलयन्नत्यल्पे एव वयसि ऐहिकं शरीरं तत्याज ।

बहुकुटुम्बपरिपूर्णेऽस्मत्कुले तदानीमुचितलौकिककार्यसम्पादनार्थमपि परिपूर्णं धनं नासीदतस्तातपादाः ब्राह्मणोचितसंस्कारसम्पादनानन्तरमेव स्वग्रामे विद्या-व्यवसायसंकटमनुभूय नवमे वर्षे ग्रामाद्बहिर्भूत्वा हरिनगरग्रामे तदानीं विद्याविभव-सम्पन्नस्य सुप्रसिद्धस्य हलधर- (प्रसिद्ध 'हल्ली)' शर्म्मणः सकाशमध्ययनार्थं जग्मुः । तत्र वर्षद्वयं यावत् व्याकरणे तन्त्रे च कतिपयग्रन्थानधीतवन्तः । पुनस्तत्रा-प्यार्थिकक्लेशं सम्प्राप्य तत्स्थानं परित्यज्य तदानीं सुप्रसिद्धे गन्धवारिनगरे सुविख्यातमहामहोपाध्याय-डाक्टर-सर-श्रीगङ्गानाथझाशर्म्मणो मातामह्या पुण्य-शीलया श्री३वसुमतीदेव्या संस्थापिते विद्यालये महामहोपाध्यायश्री६रजेमिश्र-शर्म्मणां सकाशमध्ययनार्थमागतवन्तः । तेभ्य एव शब्देन्दुशेखरादिव्याकरणग्रन्था-नधीत्य स्वालौकिकविद्याकौशलप्रतिभाभिस्तदानीमेव विदुषां समाजे परां ख्यातिं प्राप्तवन्तः । तदनु गुणाग्निग्रहभू (१९३३) परिमिते च वर्षे श्री३वसुमतीदेव्या सहैव नावा काशीमागत्य तस्या एव लब्धजीविकाः प्रातःस्मरणीयानां श्रीमतां बालशास्त्रिणामन्तेवासिनो भूत्वा पूर्वमधीतमपि व्याकरणं समग्रं सम्मार्ज्य शास्त्रा-

न्तराण्यपि समग्राण्यधिगतवन्तः । समस्तपण्डितमण्डलानां दौर्भाग्येणाचिरेणैव कालेन शास्त्रिणः परलोकं गताः । तदनु शास्त्रिणामनुरोधेनैव कियन्तं कालं यावत् श्रीदामोदरशास्त्रिणः सकाशे द्वितीयगुरुभावेनाधिगतान्येव शास्त्राण्यालोचयामासुः । तत्पश्चात् क्रमशः सर्वतन्त्रस्वतन्त्रैः प्रातःस्मरणीयैः श्रीमद्भिः शिवकुमारशर्ममिश्रैस्सह तातचरणानां शास्त्रतत्त्वालोचने विशेषेण घनिष्ठता बभूव । श्रीमतां मिश्राणामलौकिकशास्त्रमर्मज्ञानेनाकृष्टास्तातपादाः तृतीयगुरुस्वरूपेणैतान् स्वीकृत्य क्रमशोऽधीतान्यप्यखिलानि शास्त्राणि पौनःपुन्येन विशिष्टतर्कवितर्कद्वारा एतैस्सह सम्यगालोचितवन्तः । प्रत्यहमुभावपि गुरुशिष्यौ सायं काले काशीनगराद्बहिः 'बड़ी गैवी'ति नामकप्रसिद्धकूपपर्य्यन्तं गत्वा जनासङ्कीर्णप्रदेशे शास्त्राण्यालोचितवन्तौ । मार्गेऽपि तयोः शास्त्रविचारः प्रचलित एवासीत् । पश्चात् बहिर्गमनं परित्यज्य शास्त्रिणां वासस्थल एवैतयोः शास्त्रसम्मेलनं भवति स्म । इत्थं कतिपयवर्षपर्य्यन्तं तयोर्मिथः शास्त्रतत्त्वेषु गूढार्थालोचनानि निरवच्छिन्नानि प्रचलितानि । नासीत् किमपि शास्त्रतत्त्वं यदधिकृत्य तयोर्विचारो न प्रवर्त्तितः । एषु तर्केषु पूर्वाचार्यैरनधिगतानि शास्त्रमर्माणि समुद्भूतानि । एतानि सर्वाणि तातचरणैः स्वग्रन्थेषु तत्तत्स्थलेषु सुस्पष्टं प्रतिपादितानि । इत्थं न केवलमेतयोरेव गुरुशिष्ययोर्महान् लाभः समजायत किन्तु शास्त्राणां शास्त्रमर्मजिज्ञासूनामपि कृते अपूर्वो लाभो बभूवानेन ।

अत्रान्तरे तातपादानां वेदान्तशास्त्रनिष्णातानां परमहंसपरिव्राजकाचार्याणां श्री१०८विशुद्धानन्दसरस्वतीनां च मिथः परिचयो जातः । तातपादाः समये समये वेदान्तयोगदर्शनादीनामालोचनार्थं स्वामिवराणां सकाशं गच्छन्ति स्म ।

तदानीं वस्वग्निग्रहभू-(१९३८)-मिते वैक्रमाब्दे श्री१०८विशुद्धानन्दसरस्वतीभिः प्रेरितेन मिथिलाधीशेन पवित्रकीर्तिना महाराजश्री५लक्ष्मीश्वरसिंहमहोदयेन काश्यां दरभङ्गापाठशालेतिसंज्ञको विद्यालयः संस्थापितः । युवावस्थायामेव काशीस्थविद्वज्जनमण्डलेषु प्राप्तवैदुष्यप्रतिष्ठाः श्रीमन्तस्तातचरणाः स्वामिवराणामनुरोधेनैव श्रीशिवकुमारमिश्र–श्रीरामकृष्ण–(प्रसिद्ध तात्या)–शास्त्रि–श्रीसुधाकरद्विवेद–श्रीदुःखभञ्जनकविभिः पण्डितरत्नैः सह तत्र व्याकरणाध्यापकासनं सुशोभयामासुः समभूषयंश्च तदासनं वेदर्षिग्रहभू-(१९७४)-मितवर्षपर्य्यन्तम् । विद्यालयेऽस्मिन्नध्यापयद्भिरेतैश्छात्राणां सुखबोधाय चन्द्राचलरत्नभू-(१९७१)-मिते वर्षे परिभाषेन्दुशेखरस्य **विजयानाम्नी** टीका व्यरचि । अनेन ग्रन्थरत्नेन तत्रभवतां तातपादानां प्रतिष्ठा दिगन्तव्यापिनी बभूव ।

तदनन्तरं काशीस्थहिन्दूविश्वविद्यालयाध्यक्षास्तान् प्राच्यविद्याविभागे प्रधानाध्यापकपदव्यां सादरमाहूय समावेशयन् । तदारभ्याजीवं तदेव पदं तैरलङ्कृत-

मासीत् । अत्रान्तरे रसपर्वतग्रहचन्द्र-(१९७६)-मिते वर्षे **शास्त्रार्थरत्नावलीति-**नामकः सपरिष्कारः पाणिनीयसूत्रार्थरूपो ग्रन्थस्तैर्निर्मितः । अत्र ग्रन्थे सपरिष्कारशास्त्रार्थकोटिपरम्पराऽलौकिकशास्त्रमहिम्ना पितृचरणैः प्रादर्शि । अत्रैव गुरुपरम्परागता सपरिष्कारा शास्त्रार्थकोटिप्रणाली परां काष्ठां प्राप्य प्रायो विश्वेश्वरसायुज्यमलभत । अन्तिमावस्थायां पण्डितमण्डलैः प्रेरितास्तातपादा व्युत्पत्तिवादस्य **जयानाम्नीं** टीकां रचितुं नेत्रवसुग्रहचन्द्र-(१९८२)-मिते वर्षे प्रारभन्त किन्तु सर्वेषां शास्त्ररसिकानां दौर्भाग्येण प्रथमाविवरणे भेदान्वयविचारे 'प्रत्ययत्वाद्यनुपस्थितिदशायां' इतिग्रन्थपर्य्यन्तस्यैव टीकां विरचयन्त एव कर्णमूलकसन्निपातज्वराभिभूता बभूवुः । तत्रापि ज्वरप्रलापेषु शास्त्रीयाण्येव वाक्यान्युच्चेरुः। मरणात् प्राक् चत्वारि दिनानि मणिकर्णिकायां चक्रपुष्करणीतीर्थगङ्गाप्रवाहयोर्मध्ये स्थित्वा—"उत्क्षिप्य बाहू त्वसकृद्ब्रवीमि, त्रयीमयेऽस्मिंस्त्रयमेव सारम् । विश्वेशलिङ्गम्मणिकर्णिकाम्बु, काशीपुरी सत्यमिदं त्रिसत्यम्" इति पद्यमच्चैर्घोषयन्तो मध्याह्नवेलायामात्मीयजनानां समक्षं मणिकर्णिकागङ्गाप्रवाहे निमग्नार्द्धशरीरास्त्रिवसुरत्नशशी-(१९८३)-परिमिते वैक्रमाब्दे फाल्गुनशुक्लसप्तम्यां गुरौ विश्वेश्वरसायुज्यमगमन् ।

इत्थं प्रायः षट्चत्वारिंशद्वर्षाणि नानाशास्त्राण्यध्यापयतां सहस्रशश्छात्रान् पाण्डित्यपदवीं प्रापयतां लोकोत्तरकीर्त्या दश दिशो धवलयतामेतेषां वैदुष्यमहिम्ना चमत्कृतो भारतसम्राट् ग्रहचन्द्ररत्नभू-(१९१९)-मिते ईशवीये पण्डितसम्राड्भ्य एभ्यो महामहोपाध्यायपदवीं वितीर्यास्याः पदव्याः प्रतिष्ठां वर्धयामास । तातचरणानां प्रायशो गणितशास्त्रवर्जं सर्वेष्वपि शास्त्रेषु पूर्णतयाऽऽधिपत्यमासीदिति तेषां ग्रन्थपर्यालोचनेनैव सुस्पष्टं प्रतिभाति । तथाप्येतदेवालं यच्छास्त्रविचारस्य तु सारमेवैतेष्वेकत्रीकृतमासीत् । पण्डितवराः सपरिष्कारशास्त्रार्थमूर्त्तय एवासन्निति विदुषां परामर्शः ।

सनातनधर्म्मिणां कृतेऽपि पूज्यपादा आदर्शा एवासन् । षट्चत्वारिंशद्वर्षाणि यावन्नित्यं ब्राह्मे मुहूर्त्ते समुत्थाय कृतनित्यक्रियाः मणिकर्णिकागङ्गाप्रवाहे कृतावगाहाः विश्वनाथादिदेवतादीनामर्चां विधाय सूर्योदयात्पूर्वमेव सहस्रसंख्यकगायत्रीं जपित्वा विद्यालयं गच्छन्ति स्म । तत्रैकादशवादनं यावच्छात्रानध्यापयामासुः । तत आगत्य पुनः स्नानादिकं सम्पाद्य षडङ्गशतरुद्रस्नपनपूर्वकनर्मदेश्वरशालग्रामशिलादीनां पूजां कृत्वा मध्याह्नोत्तरे होरैकवादनानन्तरमेवाहारं सम्पादयामासुः । तदनु कियन्तमेव कालं यावत् विश्रामं कृत्वा पुनः समागतान् छात्रान् आ सायं पाठ्यामासुः । तत्पश्चात् सायंकृत्यं विधाय गुरोरन्तिकं गत्वा तैः सहैव शास्त्राण्यालोच्य प्रहरानन्तरं गृहं समागत्य पुनः तत्रैकत्रीभूतानात्मीयान् विशिष्टछात्रा-

नेकादशहोरापर्य्यन्तमध्यापयन्तो रात्रिभोजनानन्तरं विश्रामागारं गच्छन्ति स्म। एवंविधं तातचरणानामाह्निकं कर्म आजीवमासीत्।

तन्निर्मिता अन्ये च ग्रन्थाः—(१) शब्देन्दुशेखरस्य टीका (अपूर्णा), (२) महाविनायकस्थापनपद्धतिः, (३) वास्तुपद्धतिः, (४) शतचण्डीविधानपद्धतिः, (५) कुलदेवतास्थापनपद्धतिः, (६) नीलवृषोत्सर्गपद्धतिः, (७) तुलादानपद्धतिः, (८) धर्मशास्त्रविषयका निबन्धाश्च।

तातचरणानां क्रमशस्तिस्रो भार्या बभूवुः। तत्र प्रथमा ससन्ताना नष्टा। द्वितीयाऽप्यचिरेणैव परलोकं गता। तस्यां पुत्रद्वयं कन्यारत्नञ्च। कन्या त्वचिरेणैव पञ्चत्वं जगाम। पुत्रयोर्ज्यायांस्त्वस्य निबन्धस्य लेखक एव, कनीयान् श्रीरमेशः प्रवेशपरीक्षापर्यन्तमाङ्गलभाषामधीत्याधुना गृहकार्ये संलग्नः। विनष्टायान्तु तस्यामावामल्पवयस्कावास्व। अत आवयोः पोषणाद्यर्थं तृतीयामुपायंस्त। तस्यामेकः पुत्रः श्रीश्रीकृष्णो 'मास्टर ऑफ आर्टस्' (M.A.) पर्यन्तमाङ्गलविद्यामधीत्य जीविकोपायलग्नोऽस्ति—कन्यकाद्वयञ्च। तयोर्विवाहसंस्कारस्तातचरणैरेव सम्पादितः।

ग्रन्थरचनातिरिक्ताऽपरा चिरस्थायिनी कीर्त्तिरूपैतेषां कृतिरेका पुष्करिणी मिथिलायां स्वनिवासग्रामे वर्त्तते। एतस्याः पुष्करिण्याः 'शाके षट्श्रुतिनागभू-(१८४६)-परिमिते ज्येष्ठे वलक्षे गुरौ' चतुरग्निविधानेन यागं गुरुवराः स्वयमेव सम्पादितवन्तः। यस्मिन् वैदिके कर्मणि कर्मकाण्डनिष्णातो वैयाकरणकेसरी महामहोपाध्यायः परमेश्वरशर्म्मा पौरोहित्यं सम्पादितवान्, महामहोपाध्याय-डाक्टरसर—श्री६गङ्गानाथझाशर्म्मप्रमुखा विद्वांसः साक्षिण आसन्। एतद्विषयक-निम्नलिखितश्लोकास्तातचरणानां गुरुचरणैर्महामहोपाध्यायश्री६रजेमिश्रशर्म्मभिर्निर्मिताः सन्ति :—

आसीदत्र बखेडिशर्ममतिमान् यश्चित्रनाथाभिधो
विख्यातो मिथिलावनौ गजहराग्रामे निवासी कृती।
पुत्रास्तस्य बभूवुरुत्तमगुणास्तेष्वेव सर्वोत्तमो
दुर्द्धर्षो जयदेवशर्मशुभकृत्पाण्डित्यपारङ्गमः ॥१॥
काशीपण्डितमण्डलीमणिमहामालासुमेरूपमः
कीर्तिस्तोमसमस्तसोमविकसज्ज्योत्स्नाजगन्मण्डनः।
शास्त्रार्थे न हि कोऽपि येन तुलितो वैतण्डिकः पण्डितः
सासील्लब्धमहामहोत्तरपदोपाध्यायसत्पद्धतिः ॥२॥
कीर्तिः पुष्करिणीयमस्य विदुषो विद्याप्रसूता सती
तस्या दानविधौ च वैदिकगणः कल्पोक्तसम्भारतः।

श्रीचातुश्चरणैरयष्ट विधिभिर्वेदोदितैः कर्मठः
शाके षट्श्रुतिनागभूपरिमिते ज्येष्ठे वलक्षे गुरौ ॥३॥
तस्माद्वर्षयुगान्तरोत्तरगतश्रीभास्करेऽच्छे दले
श्रीकाशीमणिकर्णिकामरनदीतीरे जपँस्तारकम् ।
दुःखागारशरीरमत्यजदथो तादृग्जगन्नश्वरं
काशीवासफलं फलं द्विजजनैर्मोक्षं प्रलेभे सुधीः ॥४॥

एवञ्चैहिकसमस्तसम्पदनुमापितप्राक्तनपुण्यराशयो नित्यसदनुष्ठानाः प्रत्यक्षीकृतब्राह्मण्याः पूज्यचरणाः सर्वेषां विद्यार्थिनां विपश्चितां सनातनधर्मावलम्बिनामादर्शा इवासन् । अतः परं यत्तेषामेव प्रधानान्यतमच्छात्रैः प्रातःस्मरणीयैः समस्तविश्वविख्यातैः स्वनामधन्यैर्महामहोपाध्यायादिविविधपदवीविभूषितैः श्रीदगङ्गानाथझाशर्म्मभिर्लिखितन्तदेवात्रोद्धृत्य लिख्यते—'शून्यमधुना पण्डितमण्डलम्भारते, शास्त्रार्थचर्चा त्वस्तप्रायैव । शोकसन्तप्तेनाधिकं वर्णयितुन्न पार्यते । समाश्वासनस्थानमेतावदेव यदधिकक्लेशं विनैव पठनपाठनादिकार्यं कुर्वाणा एव यथा सर्वत्र जीवने प्रौढा आसंस्तथैवामरणन्निरवाहयन् । ज्वराक्रान्तदिनपर्यन्तं व्युत्पत्तिवादटीकारचनायां लग्ना आसन् । अत एवोक्तम्:—

जयः कुले जयोऽभ्यासे जयः पण्डितमण्डले ।
जयो मृत्यौ जयो मोक्षे 'जयदेवः' सदा जयः ॥'

इति शुभम्

'जयनिवास'
प्रयाग
श्रीकृष्णजन्माष्टम्यां शुक्रे
१९९८ वैक्रमाब्दे

विदुषामनुचरः
**उमेशमिश्रः**



महामहोपाध्याय-पण्डितराज-जयदेवशर्म्ममिश्राः
(जीवनकालः १९११–८३ वैक्रमाब्द)

# अथ परिभाषेन्दुशेखरः

## विजयाऽलङ्कृतः

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

श्रीगणेशाय नमः

गौर्य्यङ्कात् स्वेन्दुमाक्रष्टुं हस्तमुत्क्षिपतोऽसकृत् ।
गजास्यस्यास्यमालोक्याहसते शम्भवे नमः ॥ १ ॥
दरभङ्गानरेशस्य काशीस्थे पाठसद्मनि ।
अध्यापकपदं प्राप्तो जयदेवाभिधस्सुधीः ॥ २ ॥
विजयाख्यामिमां व्याख्यां पारिभाषेन्दुशेखरीम् ।
परिष्कृतियुतां कुर्व्वे विद्वद्वृन्दमनोमुदे ॥ ३ ॥

ग्रन्थसमाप्त्यादिप्रतिबन्धकदुरितप्रशमाय कृतं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—नत्वेति । स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपनमस्कारो नमधात्वर्थः। स्वं नमस्कर्ता व्यापारश्च करशिरस्संयोगादिरूपो बोध्यः ।

ननु देवदत्तस्य स्वापेक्षयाऽपकृष्टत्वे 'देवदत्तं नमस्करोती'तिप्रयोगो न स्यात्, तादृशबोधस्य तत्रासम्भवात् ।

ननु तादृशबोधाभावेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वस्य तत्रापि सत्त्वान्न कर्म्मत्वानुपपत्तिर्न वा बोधानुपपत्तिर्बाधितस्यापि भ्रमात्मकबोधसम्भवादिति चेत्—न । अयं माम्प्रति हीनो विनीतश्च न मदीयव्यापारशतेनापि मामपकृष्टं ज्ञास्यति स्वापेक्षयेतिनिश्चयसद्भावेऽपि तादृशस्येष्टस्य प्रयोगस्यानुपपत्तेस्तत्र कर्तुस्तादृशेच्छाया अप्यसम्भवात् ।

अत्रोच्यते—स्वधर्म्मिकोऽपकृष्टत्वप्रकारकबोधाश्रयत्वप्रकारको यो बोधः 'अयं मदपेक्षयापकृष्टमात्मानं जानाती'त्याकारकस्तदनुकूलो व्यापारो नमस्कारस्स च बोधो निरुक्तस्थलेऽपि सम्भवतीति नानुपपत्तिः। न च सन्निहितशूद्रादेरपि तादृशव्यापारेण तादृशबोधसम्भवात् ब्राह्मणं नमति चैत्रे शूद्रन्नमतीति प्रयोगापत्तिर्न च दैवात्तादृशबोधाश्रयत्वेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वाभावान्न शूद्रस्य कर्म्मत्वापत्तिः। कर्त्तुरित्यस्य प्रवृत्त्यभावेऽपि तथायुक्तमित्यनेन तदापत्तेर्दुर्व्वारत्वादिति वाच्यम्, स्वावधित्वेन विवक्षितवृत्तित्वस्वप्रकारकबोधाश्रयत्वप्रकारकत्वोभयसम्बन्धेनापकृष्टत्वविशिष्टो यो बोधस्तदनुकूलव्यापारस्यैव नमस्कारपदार्थत्वात्। शूद्रवृत्तिबोधे द्वितीयसम्बन्धसत्त्वेऽपि प्रथमसम्बन्धस्याभावान्न हि शूद्रोऽपकृष्टत्वावधित्वेन विवक्षितोऽस्ति नमस्कर्तुः। विवक्षितत्वनिवेशाद्वस्तुतस्स्वापेक्षयाऽपकृष्टे उदासीने वाऽव्याप्त्यतिव्याप्त्योरभाव इति सर्वमवदातम्।

अम्बया सहितः साम्बः। अम्बा माता। सा चाविशेषाज्जगज्जननी माया गृह्यते। तत्सहितत्वेन परमेश्वरस्य शिवस्य वस्तुतो निर्द्धर्म्मकस्याकर्तुरसंज्ञस्यापि सृष्टिकर्तृत्वमुक्तम्भवति। वृद्ध्यर्थकबृहधातुनिष्पन्नब्रह्मशब्देन पालनकर्तृत्वं बोध्यते। शेते अस्मिन्नविशेषात्सर्व्वं जगदिति व्युत्पत्त्या प्रलयकर्तृत्वम्। ततश्च जगतः सृष्टिस्थितिप्रलयकर्त्तारं 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्तीति' श्रुतिप्रतिपाद्यं परमेश्वरन्नत्वेत्यर्थः। यदि च सन्निधानान्नागेशाम्बैवाम्बापदेन गृह्यते, अम्बासाहचर्य्यान्नागेशपितैव शिवः शिवशब्देनोच्यते तर्हि स्वजननीसहितं स्वपितरं शिवनामानन्नत्वेत्यर्थोऽपि युक्त एव। शिवस्यैव माता सान्निध्यादम्बापदेनोच्यते। ततश्च स्वपितामहीसहितं पितरमित्यप्यर्थः। क्त्वाप्रत्ययस्य समानकर्तृकपूर्व्वकालिकक्रियावाचकधातोर्व्विधानात् कुरुत इत्येतत्प्रतिपाद्ये विशेष्यभूतव्यापारे स्वकर्तृकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन नमधात्वर्थव्यापारस्यान्वयस्तदर्थ एव फलभूते बोधे अभेदेन साम्बब्रह्मपदार्थान्वितशिवपदार्थस्य समवेतत्वसम्बन्धेनान्वयः।

बालानामित्यस्य साधारणबुद्धिमतामित्यर्थः। तस्य सुखबोधपदार्थे सुखसमानाधिकरणबोध अन्वयस्समवेतत्वेन। एतेन विशिष्टबुद्धीनां क्लेशेन मन्दबुद्धीनाञ्च महाभाष्यादितोऽपि परिभाषार्थबोधसम्भवान्निष्फलोऽयं ग्रन्थारम्भ इत्यपास्तम्। तस्य च तादर्थ्यचतुर्थ्यन्तार्थस्य प्रयोजकत्वसम्ब-

न्धेन कृधात्वर्थव्यापारेऽन्वयः। शोभना सूक्ष्मपदार्थावगाहिनी धीर्बुद्धिर्यस्य स सुधीस्तस्याभेदेन नागेशपदार्थेऽन्वयः। अनेन विशेषणेनात्मोत्कर्षबोधनद्वारा ग्रन्थोत्कर्षो बोधितः। नागेशस्य च कर्तव्यात्मनेपदार्थे अन्वयस्तस्मिन्नेव तदर्थसंख्यायाः समवायसम्बन्धेनान्वयः। कर्तुश्च वृत्तित्वसम्बन्धेन तदर्थवर्त्तमानकालस्य च परिच्छिन्नत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः। तस्य च मुख्यविशेष्यतया भानं 'भावप्रधानमाख्यातमि'ति वचनात्।

इन्दुरिव परिभाषा परिभाषेन्दुः। व्याकरणसिद्धान्तप्रकाशकत्वेन भाष्यादितः परिभाषार्थज्ञाने जायमानक्लेशरूपसन्तापनिवर्त्तकत्वेन च चन्द्रसादृश्यं परिभाषायाः। स शेखरः। शेखरसदृशः। अर्थात्प्रधानं यस्मिन् ग्रन्थेऽसौ परिभाषेन्दुशेखरस्तम्। तस्य च वृत्तित्वसम्बन्धेन धात्वर्थफले उत्पत्तावन्वयः। परितो भाष्यते पुरुषार्थसाधनत्वादिनोद्घोष्यत इति परिभाषः शिवः। स चासाविन्दुशेखर इति व्युत्पत्त्या शिवेऽपि तन्त्रेण परिभाषेन्दुशेखरपदार्थस्यान्वयः। तथा च साम्बाभिन्नब्रह्माभिन्नशिवसमवेतोत्कृष्टत्वविशिष्टबोधानुकूलो यो व्यापारस्तद्विशिष्टो बालकसमवेतसुखसमानाधिकरणबोधप्रयोजकसुद्ध्यभिन्ननागेशाभिन्नैकत्वविशिष्टकर्त्तृवृत्तिः वर्त्तमानकालपरिच्छिन्नः परिभाषेन्दुशेखरवृत्त्युत्पत्त्यनुकूलो व्यापार इति बोधः।

अनेनाध्येतृप्रवृत्तिप्रयोजकत्वेनावश्यप्रदर्शनीयानुबन्धचतुष्टयमपि प्रदर्शितम्। **अनुबन्धत्वञ्च** प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। तथा हि—तद्विषयकप्रवृत्तिं प्रति तद्धर्म्मिकेष्टसाधनत्वप्रकारकज्ञानं कारणम्। तच्च प्रकृते परिभाषेन्दुशेखरो मदिष्टसाधनं इत्याकारकं ज्ञानं, तद्विषयतेष्टत्वावच्छिन्ना सुखबोधनिष्ठा परिभाषेन्दुशेखरत्वावच्छिन्ना ग्रन्थनिष्ठाऽस्मदर्थत्वावच्छिन्ना बालकनिष्ठा साधनत्वत्वावच्छिन्ना प्रयोजकत्वनिष्ठेति सुखबोधपरिभाषेन्दुशेखरबालकप्रयोजकत्वानां प्रयोजनविषयाधिकारिसम्बन्धानामनुबन्धत्वमुपपन्नम्। न च

आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः॥

इति स्मृतेः नागेशेति स्वनामोच्चारणमसङ्गतमिति चेत्—उच्यते। अक्षरानभिज्ञेनापि यथादृष्टं ग्रन्थस्य लेखनादुच्चारणम्विनापि लेखो भवतीति स्वीकर्त्तव्यतया प्रकृते तथैव सत्त्वेनादोषात्। लेखस्य भृत्यकर्तृकस्यापि सम्भवान्नागेशकर्त्तृकत्वस्यैवासिद्धेश्च स्वकीयग्रन्थनिर्माणसामर्थ्यस्य **पतञ्जलिप्रणीतमहाभाष्याध्ययनजन्यतया पतञ्जलिरेव कुरुते न त्वहम्।** अहन्तु लेखनीस्थानीय इति ग्रन्थकारस्याशयेन नागेशपदेन महाभाष्यकार-

स्यैव नागानामीश इतिव्युत्पत्त्याऽभिधानाच्च। सङ्कल्पवाक्ये पत्रलेखादौ च स्वनामोच्चारणव्यवहारस्य प्रचुरतया परश्रवणोपयोगिनामोच्चारणनिषेधपरत्वस्यैव स्मृतेरभ्युपगमाच्च। पण्डितब्राह्मणादिशब्देन स्वस्यापि स्वेनाभिलापस्य शिष्टाचारगोचरतया 'एकादशे द्वादशे वाऽहनि पिता नाम कुर्य्यादि'ति श्रुतिविहितनामोच्चारणस्यैव निषेधविषयत्वेन नाग ईशः प्रवर्त्तको यस्य सः। नागस्य ईर्नागेः भाष्यकारस्य लक्ष्मीः महाभाष्यं तां श्यति तनूकरोतीति नागेश इतिव्युत्पत्तिकस्य नागेशनाम्नो निषेधविषयत्वाभावाच्च। यद्वा ईशते इतीशः प्रभवो नागानामीशो नागेशस्तान् नागेश इति द्वितीयान्तं नत्वेत्यनेनान्वितम्।

'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिम्विदुः।

कामन्तेषु तु विप्रोष्य स्त्रीष्विवायमहम्वदेत्—

इति श्रुत्या 'नामगोत्रम्वे'ति वार्तिकाच्च स्वनामगोत्रोच्चारणपूर्वकस्यैवाभिवादनस्य लाभेन यथा 'मा हिंस्यात्सर्व्वा भूतानी'तिनिषेधस्य 'अग्नीषोमीयं पशुमालभेदि'त्यनेन बाधस्तथाभिवादने नामोच्चारणविशेषविधिना सामान्यनामोच्चारणनिषेधस्य बाधेनादोषाच्च। न च **वाचस्पतिमिश्रेण साङ्ख्यकारिकाव्याख्यानावसरे**ऽग्नीषोमीयपशुहिंसया बाधो नोक्त इति दृष्टान्तासिद्धिरिति वाच्यम्। तावताऽपि 'स्वल्पः सङ्करस्सपरिहारस्सप्रत्यवमर्ष' इति **पञ्चशिखाचार्य**वाक्येन तत्र पापसद्भावस्य प्रामाणिकत्वेन बाधाभावेपि प्रकृते बाधाभावे प्रमाणाभावात्।

यत्तु कूपखननजन्यजलेन यथा खननहेतुककर्दमादिलेपस्य नाशो भवति पुण्योत्पत्तिश्च भवति तथैव नमस्कारजन्यादृष्टेन नामोच्चारणजन्यपापनाशः समाप्तिप्रतिबन्धकदुरितध्वंसश्च भविष्यतीति नात्मनामोच्चारणजन्यकलङ्कावतार इति तन्न। तत्तत्पापनाशम्प्रति प्रातिस्विकरूपेण तत्तत्कर्मणो हेतुतायाः शास्त्रे प्रतिपादनेन यस्य कर्म्मणो यत्पापनाशकत्वमुक्तं शास्त्रकारेण तस्यैव तत्पापनाशकत्वस्य स्पष्टं द्योतितया प्रकृते अभिवादनजन्यं पुण्यं नामोच्चारणजन्यपापनाशकमित्याकारकवाक्यस्याभावेनोक्तार्थे प्रमाणाभावात्। कूपखननस्थले प्रत्यक्षप्रमाणेनैव तथास्वीकारादित्यास्ताम्।

ननु परिभाषाणां शास्त्रभेदेन भिन्नतया व्याकरणपरिभाषापदार्थः क इति चेत्? अत्रोच्यते—अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वं परिभाषात्वम्। यथा 'तस्मिन्नि'ति परिभाषाव्यापारमन्तरेणेको यणचीत्यादेरजुपश्लिष्टस्येको यण् साधुरित्याद्येव बोधः। उपश्लिष्टत्वं पूर्वापरसाधारणमित्यप्रामाण्यज्ञानास्कन्दितोऽनास्क-

**प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र पाणिनीयतन्त्रे ज्ञाप-**

---

न्दितश्चाजव्यवहितपूर्वत्वविशिष्टस्येको यणित्याकारकस्तस्मिन्निति व्यापाराधीन इति तस्मिन्निति परिभाषाजन्यबोधोऽप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगी तज्जनकत्वञ्च तस्या इति तत्त्वमुपपन्नम् । न चैवं वृद्ध्यादिपदार्थज्ञानद्वारा वृद्धिरादैजित्यादिसंज्ञाशास्त्राणामपि वृद्धिरेचीत्यादिवाक्यार्थबोधोपयोगिबोधजनकत्वात्परिभाषात्वापत्तिरिति वाच्यं, चरमबोधे शक्त्यविषयकत्वस्य निवेशनीयत्वात् । नाप्यपवादशास्त्रेण स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचादुत्सर्गशास्त्रीयाप्रामाण्यज्ञानानास्कन्दितो यः सङ्कुचितधर्म्मावच्छिन्नोद्देश्यताको बोधः तदुपयोगिबोधजनके 'अकस्सवर्णे दीर्घ' इत्याद्यपवादशास्त्रे परिभाषात्वापत्तिः । साधुत्वाप्रकारकत्वेनापि चरमबोधस्य विशेषणादधिकारशास्त्रस्य विधिनैकवाक्यतयैव बोधकत्वात्साधुत्वाप्रकारकनिरुक्तबोधजनकत्वाभावान्न तत्रातिव्याप्तिशङ्कापि । पूर्वत्रासिद्धमित्यस्याधिकारत्वेऽपि होढ इत्यादाविदं शास्त्रं तत्तच्छास्त्रदृष्ट्या सिद्धमित्याकारकपृथग्बोधजनकत्वेन तद्बोधस्य साधुत्वाप्रकारकत्वेऽपि निरुक्तबोधोपयोगित्वाभावेनादोषात् । अतिदेशशास्त्रस्य प्राधान्यात्कार्य्यातिदेशकत्वेन तत्रापि नातिव्याप्तिः । निषेधशास्त्राणां वार्त्तिकानाञ्च पृथक् साधुत्वाप्रकारकबोधाजनकत्वेन न परिभाषात्वापत्तिः ।

नन्वेव'मसिद्धस्बहिरङ्गमन्तरङ्गे' इत्यादिपरिभाषाबोधस्य निरुक्तबोधोपयोगित्वाभावेन तत्राव्याप्तिरिति चेदिदमत्रावधेयं विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाप्रकारकशक्त्यविषयकबोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं तत्त्वम् । परिभाषया कस्यचिद्विधिशास्त्रस्य कुत्रचित्प्रवृत्तेर्निवृत्तेर्वावश्यम्भावाल्लक्षणसमन्वयः । रूपातिदेशस्य तृज्वत्क्रोष्टुरित्यस्य विचारेण साधुत्वप्रकारकबोधजनकत्वस्यैव लाभेनादोष इति दिक् ।

निरुक्तलक्षणलक्षितानामपि 'तस्मिन्नि'त्यादिपरिभाषाणामव्याख्यानेन न्यूनत्वशङ्कावारणाय व्याख्येयानि परिभाषारूपाणि निर्दिशति— **प्राचीनवैयाकरणे**त्यादिना । तस्मिन्नित्यादीनां स्वतःप्रामाण्येन ज्ञापकन्यायसिद्धत्वाभावेन व्युदासः ।

ननु स्वतस्सिद्धान्यपि 'यस्मिन् विधिस्तदादावल्ग्रहणे' 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'त्यादीनि व्याख्यातान्यत एव तत्र तत्र वाच-

**कन्यायसिद्धानि भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।**

---

निकमिदमित्युक्तं सङ्कुच्छत इति प्रतिज्ञाभङ्ग इति चेत्—

अत्र **केचित्** **प्राचीनवैयाकरणतन्त्र** इत्यादि सप्तम्यन्तद्वयं न क्रमेणान्वय्यर्थप्रतिपादकं येन वाचनिकेषु पाणिनीयतन्त्रान्वयो न स्यादपि तु समुच्चयार्थकचशब्दमुभयत्राप्यध्याहृत्य **प्राचीनवैयाकरणतन्त्रे अत्र पाणिनीयतन्त्रे च वाचनिकानि ज्ञापकन्यायसिद्धानि** चेति रीत्या समुदायत्वावच्छिन्नस्य समुदायत्वावच्छिन्नेऽन्वयाद्यथायोग्यमन्वयविश्रान्तेरापत्त्यभावादित्याहुः ।

**अन्ये** तु ज्ञापकन्यायशब्दाभ्यामर्श आद्यचि ज्ञापकेत्यस्य ज्ञापकसिद्धं न्यायेत्यस्य न्यायसिद्धं सिद्धेत्यस्य स्वतस्सिद्धमित्यर्थं कृत्वा वाचनिकमपि संगृह्णन्ति। पक्षद्वयेऽपि तस्मिन्नित्यादिव्यावृत्तये पाणिन्यनुच्चरितानीति शेषः ।

**परे** तु ज्ञापकन्यायसिद्धत्वमेव सर्वासामिति तत्तत्परिभाषानिरूपणावसरे स्फुटीभविष्यति । तत्र तत्र वाचनिकत्वकथनन्तु भाष्ये ज्ञापकन्यायानुपन्यासप्रयुक्तमेवेत्याहुः ।

ननु नाजानन्तर्य्यात्कृतव्यूहेत्यादीनां भाष्यवार्त्तिकयोरनुपनिबद्धानामपि व्याख्यानेन प्रतिज्ञाविरोध इति चेत्–न । भाष्यवार्तिकयोरुपनिबद्धानीति न परिभाषारूपे विशेषणमपि तु स्वतन्त्रमेव । तथा च ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि च यानीत्यर्थः । भाष्यवार्त्तिकयोरित्यस्य तयोरेवेत्यर्थस्तेन**नाष्टाध्यायी**पठितानां तस्मिन्नित्यादीनां व्युदासः । नाजानन्तर्य इत्यादीनां यस्मिन्विधिरित्यादीनाञ्च संग्रहः ।

अस्मिन् ग्रन्थे त्रीणि प्रकरणानि सन्ति—शास्त्रत्वसम्पादकम्, बाधबीजकथनम्, शेषार्थकथनञ्च । एकदेशविकृतमनन्यवदित्यन्तमाद्यम् । एतदनन्तरमुभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्यन्तं द्वितीयम् । तदनन्तरं तृतीयम् । तेषु प्राधान्यात्प्रथमं शास्त्रत्वसम्पादकमुपात्तम् । तत्रापि महेश्वरोच्चरितानुबन्धमूलकत्वेनाभ्यर्हितत्वादितरपरिभाषाप्रवृत्तिप्रयोजकतया चादौ

**ननु लण्—अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—**

---

'**व्याख्यानतो विशेषेति**' परिभाषामवतारयति—**नन्विति**। गृह्यन्त एभिरिति ग्रहणानि। अणिणां ग्रहणानि अणिण्ग्रहणानि। तेषु **अणिण्ग्रहणेषु**। **सन्देहादिति**। नन्वत्र क्व सन्देहः? न तावच्छक्तौ। अण्पदमकारादिपूर्वणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमत्, उताकारादिपरणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमदित्याकारकः? आदिरन्त्येन सहेतेत्यनेनाण्पदे अकारादिणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तेर्बोधनेन शक्यतावच्छेदकाश्रययावद्व्यक्तिनिरूपितैकैव शक्तिरिति नियमेन निरुक्तसमुदायद्वयघटकसर्ववर्णानां निरुक्तशक्यतावच्छेदकाक्रान्तत्वेन तत्रत्यसकलवर्णनिरूपितशक्तिमत्त्वनिश्चयेन तस्य सन्देहप्रतिबन्धकत्वेन सन्देहासम्भवात्। न हि घटत्वावच्छिन्ननिरूपितशक्तिमत्त्वेन ज्ञाते घटपदे एतद्घटनिरूपिता शक्तिः, उत तद्घटनिरूपितेति सन्देहो भवति। न च बाधकाभावात्सर्वत्राणिण्पदेऽन्त्यणकारान्तसमुदायनिरूपितैकशक्तेरेव बोधने पूर्वणकारोच्चारणस्य वैयर्थ्यापत्त्याऽकारादिपूर्वणकारान्तसमुदायनिरूपिता परणकारान्तसमुदायनिरूपिता च भिन्नैव शक्तिर्बोध्यते। शक्यतावच्छेदककोटौ पूर्वत्वपरत्वनिवेशेनेति कोटिद्वयोपपत्तेर्न सन्देहासम्भव इति वाच्यम्। तावतापि हर्य्यादिपदे नानाशक्तिदर्शनेन शक्तीनां विरोधाभावेन विरुद्धकोटिद्वयावगाहिज्ञानरूपसन्देहासम्भवस्य तादवस्थ्यात्। नापि तात्पर्ये सन्देहः। प्रकृते निर्णायकाभावेनैतदण्पदमेतच्छक्तिज्ञानाधीनबोधजननेच्छयोच्चरितमपरशक्तिज्ञानाधीनबोधजननेच्छया वेत्याकारकः। मदीयः पुत्रो धनवान् भवतु पण्डितश्च भवत्वित्येकस्मिन्ननेकेच्छाविशेष्यत्वदर्शनेनाविरोधात्सन्देहस्य तत्राप्यसिद्धेः।

अत्रोच्यते—यद्यप्येकस्मिन्नपि नानातात्पर्यसम्भवः तथापि ऋषीणामिच्छाप्रतिघाताभावात्तदीयेच्छा फलवत्येव भवितुमर्हति। बोधद्वयञ्च सकृदुच्चरिताण्पदान्न सम्भवति। सकृदुच्चरितन्यायादावृत्तौ प्रमाणाभावाच्च। तस्मान्न **पाणिनि**समवेतोभयविधतात्पर्य्यविषयतापन्नमिदमण्पदमिति निश्चयेनैकस्यैव सत्त्वेनेदन्तात्पर्य्यमुतापरमितिसन्देह

व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥१॥

**विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्ति-निश्चयः। हि यतः सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं, लक्षणं तथा न। शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्य्यव्यवहारेण सन्देहनिवृत्तेः-**

---

उपपद्यते। शाब्दबोधे च तात्पर्यनिश्चयस्यैव हेतुत्वेन तात्पर्य्यसन्देहाद-निर्णयः शाब्दबोधाभाव इत्यर्थः। यदि तात्पर्यज्ञानत्वेनैव कारणता तर्हि तात्पर्यसन्देहे शाब्दबोधोपि सन्दिग्धप्रामाण्यक एवेत्यनिर्णय इत्यस्य निश्चितप्रामाण्यकशाब्दबोधाभाव इत्यर्थः।

**विशेषेत्यस्यार्थमाह— अन्यतराद्यर्थरूपस्येति ।** अन्यतमस्या-दिना ग्रहणम्। अलक्षणमित्यत्रानुष्ठापकशब्देन नञ्तत्पुरुषे लक्षणेन सह कर्मधारये शाकपार्थिवादित्वात्पूर्वसमासोत्तरपदस्य लोपे च कृतेऽल-क्षणमित्यस्याप्रवर्तकलक्षणमित्यर्थः। सन्देहात्तथा नेत्यर्थः। असन्दि-ग्धानुष्ठानसिद्ध्यर्थत्वेन शास्त्रं सन्देहादलक्षणमप्रवर्तकलक्षणं भवितुन्ना-र्हति परन्तु तथा प्राप्तमिति व्याख्यानात्सन्देहनिवृत्तिः कर्तव्येति बोध्यम्। लक्षणमित्यस्य शास्त्रमित्यर्थः। यदि तात्पर्यनिश्चयत्वेन शाब्दबोधं प्रति कारणता यदि वा तात्पर्यज्ञानत्वेन कारणता सर्वथा प्रवर्त्तकशास्त्रत्वा-भावः प्राप्त इति बोध्यम्। ज्ञापनप्रकारमाह—**असन्दिग्धानुष्ठानसि-द्ध्यर्थ** इत्यादि। भावक्तान्तसन्दिग्धपदेनार्थाभावेऽव्ययीभावः। सन्देह-स्याभावोऽसन्दिग्धं, तत्प्रयोज्यमनुष्ठानं प्रयोगोच्चारणे प्रवृत्तिरित्यर्थः। तद्विषयकप्रवृत्तिं प्रति तद्धर्म्मिकेष्टसाधनत्वनिश्चयस्य हेतुत्वेनानुष्ठानं सन्दे-हाभावप्रयोज्यम्भवति। तदर्थत्वञ्च शास्त्रस्य। तद्विना लक्ष्ये पुण्यजनक-त्वरूपस्येष्टसाधनत्वस्य निश्चयाभावेन प्रवृत्त्यभावात्।

**सन्दिग्धोच्चारणरूपाचार्यव्यवहारेणेति ।** भावक्तान्तस्य प्रयो-जकत्वार्थकषष्ठ्यन्तस्य सन्दिग्धस्य समासः।

**उच्चारणेति।** णकारोच्चारणेत्यर्थः। **आचार्य**पदेनात्र महेश्वरः। अनुबन्धस्य महेश्वरकृतत्वात्। सन्देहवारणोपायस्य खकाराद्यनुबन्धकर-

**व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् । तेना'ऽणुदित्सवर्णस्य' इत्येतत्परिहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥१॥**

---

णस्य सत्यपि सम्भवे सन्देहाभावप्रयोज्यस्य प्रयोगोच्चारणस्य सिद्धीच्छया सन्देहप्रयोजकणकारोच्चारणं सर्वज्ञस्य महेश्वरस्यानुपपन्नं सत् सन्देहनिवृत्तिर्व्याख्यानाद्भविष्यतीत्येतादृशं स्वस्योपपादकं कल्पयित्वोपपन्नमित्यर्थापत्तिप्रमाणगम्यमेव सर्वत्र ज्ञाप्यं बोध्यम् । व्याख्यानात्सन्देहनिवृत्तिस्स्यादिति बोधनायैव तथोच्चारणमिति नानुपपत्तिरिति यावत् । अत एवेको यणचीत्यादावचीतिपदमकारादिबोधकत्वेन तात्पर्यविषयमच्प्रत्ययबोधकत्वेन वेति सन्देहस्योत्पत्तिमात्रेण नाप्रामाण्यम् । एतेन ज्ञापितायामपि कथं स्वांशे चारितार्थ्यमिति शंका न, अस्या हि ज्ञाप्यमस्तु ज्ञापकं मास्त्वित्याकारः । पूर्वणकाररूपज्ञापककरणे हि अइउमात्रबोधानापत्तिः । खकाराद्यनुबन्धं कृत्वा तावन्मात्रबोधस्य अखइखपदेनोपपादने हि लाघवानवकाशस्तथा सति सन्देहाभाव इति चेत्— णकारकरणेऽप्युक्तज्ञाप्यात्सन्देहाभावसिद्धेः । किञ्चानुपपत्त्योपपादकं कल्पितन्तेनानुपपत्तिशान्तिरिति किमितोऽधिकं वक्तव्यम् । यत्र ज्ञापने जाते केनापि लघुभूतोपायेन लक्ष्यसिद्धौ गुरुभूतज्ञापककरणमनुपपन्नमेव तत्र ज्ञापिते कथं चारितार्थ्यमित्युच्यते । अन्यथा लक्ष्यासिद्धिरूपोपपादकस्य प्रदर्शनेनानुपपत्तिपरिहारे जातं चारितार्थ्यमित्युच्यते, न तथा प्रकृते उपपादितत्वात् । एतेन ज्ञापितायामप्यस्यां स्वांशे चारितार्थ्याभाव इत्यपास्तम् । सन्देहनिवृत्तेर्व्याख्यानापेक्षत्वं बोध्यत इत्येव सिद्धेः नञ्द्वयोपादानेन विरोधस्थले व्याख्यानादेव सन्देहनिवृत्तिः कर्तव्या । न **पाणिनिन्यासादिनेति** बोधनद्वारा 'यथोत्तरं मुनीनां प्रामाण्यमि'ति बोधितम् । अत एव 'हृदयस्य हृल्लेखयदण्लासेष्वि'ति सूत्रे लेखग्रहणेन लेखशब्दस्य न घञन्तलेखशब्दबोधकत्वं ज्ञापितमपि तु भाष्यकृद्व्याख्यानेनोत्तरपदाधिकारे प्रत्ययग्रहणे इति परिभाषैव ज्ञापितेति बोध्यम् । व्याख्यानञ्च तत्र तत्र ग्रन्थ एव स्पष्टम् । 'यथोत्तरमि'त्यत्र प्रमाणन्तु 'धिन्विकृण्व्योर चे'ति सूत्रेण वलोपविधानेनैव 'न धातुलोप' इत्यनेन गुणनिषेधाद्धिनोतीत्यस्य सिद्धावकारविधानमेव । ज्ञापिते च भाष्यकारेण न धातुलोप इत्यस्य प्रत्याख्यानाद्गुणाभावाय चरितार्थम् ।

## तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—

## यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

## कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरण-साधनश्चायम् । यत्र देश उपदिश्यते तद्देश एव वाक्यार्थबोधेन

---

यत्तु स्वेन स्वस्याप्रामाण्यबोधनमनुचितमिति नैतज्ज्ञापकमिति-तन्न । यथार्थबोधने अनौचित्यविरहात् ॥१॥

**तत्र संज्ञापरिभाषाविषये पक्षद्वयमिति** । तत्रेत्यस्य शास्त्र इत्यर्थस्तस्य च पक्षद्वयपदार्थेऽन्वयः । तेन पक्षद्वयत्वावच्छिन्नाधेयतानिरूपिताधिकरणता शास्त्रत्वावच्छिन्नेति लभ्यते । तत्रेत्यनुक्तौ तु संज्ञापरिभाषादेशत्वावच्छिन्नाया एव तस्या लाभेन प्रतिसंज्ञाविषयं प्रतिपरिभाषाविषयं पक्षद्वयमित्यनिष्टं सम्भाव्येत । तावन्मात्रोक्तौ तु विधिसूत्रेऽपि पक्षद्वयाधिकरणत्वापत्तिः । विषयशब्दो देशवाची । सप्तम्याश्चावच्छेदकत्वमर्थोऽधिकरणत्वान्वयि । तथा च संज्ञापरिभाषादेशावच्छेदेन शास्त्रे पक्षद्वयमित्यर्थः । **यत्र देश उपदिश्यत** इति । छात्रो द्विविधः—एकश्च श्रद्धालुः 'गुरुभिर्यन्माम्प्रत्युपदिश्यते तदवश्यमेव मदुपयोगी'ति निश्चयवान् यथाश्रुतग्राही । स वृद्धिरादैजित्यस्य वृद्धिपदमादैज्निरूपितशक्तिमदित्यर्थे तस्मिन्नित्यादिपरिभाषायाः सप्तमीनिर्देशेन विधीयमानं कार्यमव्यवहितपूर्वस्य भवतीत्याद्यर्थे च गुरुभिर्बोधिते सादरानुभवाज्जाततत्तदर्थविषयकसंस्कारो वृद्धिरेचीको यणाचीत्यादौ वृद्धिपदौपश्लेषिकाधिकरणबोधकाचीतिपदेत्यादिरूपैकसम्बन्धिज्ञानेनोद्बुद्धतत्तत्संस्कारेणानुभूततत्तदर्थं स्मृत्वा लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधवान् भवति । तदपेक्षया **यथोद्देशपक्षः** ।

अपरश्च फलानुरोधेनैव गुर्वादिवाक्येऽपि श्रद्धावान् । स वृद्धिरादैच् तस्मिन्नित्यादिवाक्यार्थे गुरुभिर्बोधितेऽपि शब्दसाधुत्वज्ञानार्थं प्रवृत्तस्य मम नानेव साधुत्वम्बोधितमिति नैतन्मदुपयोगीति निश्चित्योपेक्षितवान् ।

**गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्च प्रथमोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपन्नपेक्षोऽयं पक्ष इति 'ईदूत्'सूत्रे कैयटः।**

**केचित्तु परिभाषाविषये 'तस्मिन्'इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिः क्वेति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सक-**

---

तेन तत्तदर्थविषयकदृढसंस्काराजननाद्वृद्धिरेचीत्यादौ वृद्ध्यादिपदज्ञानेऽपि तत्तदर्थज्ञानाभावाद्वाक्यार्थबोधाप्रसक्तौ कोऽस्ति वृद्धिपदार्थ इत्यादिजिज्ञासायां पुनर्गुरुभिरुच्यमानेन वृद्धिरादैजित्यादिना सहैवं तस्मिन्नित्यादिना च सह वृद्धिरेचीत्यादीनां पदैकवाक्यतयैवार्थो बुद्ध्यते। तदपेक्षः **कार्यकालपक्षः**। अनुभवेन संस्कारजनने अनुभवस्येवापेक्षावुद्धेरपि हेतुत्वमिति भावः। तथा च **यथोद्देशपक्षे** परिभाषया संज्ञासूत्रेण च विधिशास्त्रस्य वाक्यैकवाक्यता। सा चोपजीव्योपजीवकभावापन्नबोधजनकत्वरूपा। तस्मिन्नित्यादिपरिभाषाणां वृद्धिरादैजित्यादिसंज्ञासूत्राणाञ्च बोध उपजीव्य "इको यणचि" "वृद्धिरेची"त्यादिशास्त्रजन्योऽप्रामाण्यज्ञानानास्कन्दितो लक्ष्यधर्म्मिकसाधुत्वप्रकारको बोध उपजीवकः। तादृशबोधस्य संज्ञापरिभाषाबोधाधीनत्वादिति लक्षणसमन्वयः। **कार्यकालपक्षे** च पदैकवाक्यता। सा च निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वरूपा। तत्पक्षे च विधिशास्त्रेण सह संज्ञापरिभाषयोर्बोधजनकत्वात्। परिभाषाघटकस्य पूर्वपदार्थस्य निर्दिष्टपदार्थस्य च सूत्रघटके इक्पदार्थे अच्पदार्थे चाभेदसम्बन्धेनान्वयात्। संज्ञासूत्रघटकादैच्पदार्थे सूत्रघटकवृद्धिपदस्याभेदेनान्वयाच्च। तत्रत्यप्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावापन्नयोः प्रयोजकत्वं पूर्वादिपदानां तद्घटितत्वञ्च परिभाषाविधिसूत्रयोः संज्ञासूत्रविधिसूत्रयोश्चेति लक्षणसमन्वयः। इदं **प्राचीनमतम्**।

स्वमतमुपन्यस्यति—**केचित्त्विति**। भाष्यतत्त्वविद इत्यर्थः। **सकलतत्तद्विध्युपस्थिताविति**। परिभाषया स्वीयसप्तमीनिर्देशादिलिङ्गचि-

लतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः।

एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः—कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति 'षष्ठी स्थान' इति सूत्रे भाष्य उक्तम्। अधिकारशब्देन

---

ह्नितस्वदृष्टसकलसापादिकशास्त्राणामाकर्षणमिति भावः। **सकललत्तत्संस्कारायेति**। तत्तद्विधिशास्त्रीयाप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजननायेत्यर्थः। **गुणस्येति**। विधेयस्य निर्दिष्टे पूर्वस्येत्यादिरूपस्य। **भेदमिति**। यावद्विधिसूत्रमावृत्तिम् एकेन विधेयबोधकपदेन सह सर्वविधिसूत्राणामन्वयासम्भवादिति भावः। संपूर्णपरिभाषाया विधिसूत्रेणानन्वयात्तदावृत्तौ फलाभावाद्गुणभेदमित्युक्तम्। **एकवाक्यतयैव नियम** इति। पदैकवाक्यतयैव लक्ष्यसंस्कारको बोध इत्यर्थः। परिभाषया जन्यत इति शेषः। पदैकवाक्यता तु पूर्वमुक्ता। यत्र देशे परिभाषोपदिश्यते तद्देश एव विधिसूत्रेण सह पदैकवाक्यतया लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधः परिभाषया सम्पाद्यत इति निष्कर्षः। अयमेव **यथोद्देशपक्षः**।

त्रिपादीस्थशास्त्राणां परिभाषादृष्ट्या असिद्धत्वात्तेषामाकर्षणाभावात् परिभाषया लक्ष्यसंस्कारकबोधजनकत्वं तेषान्न स्यादित्यत आह—**कार्यकालपक्षे त्विति**। तुशब्देन यथोद्देशपक्षं व्यवच्छिनन्ति। न यथोद्देशपक्ष इति यावत्। **त्रिपाद्यामपीति**। अपिना यथोद्देशपक्षे सपादसप्ताध्याय्यामित्यस्य संग्रहः। **अदृष्टपिशाचन्यायेन** त्रिपादीस्थैर्विधिशास्त्रैरेव स्वसंस्काराय परिभाषामाकृष्य पदैकवाक्यतया लक्ष्यसंस्कारको बोधः स्वदेशे जन्यत इति भावः। अयमेव **कार्यकालपक्षः**।

पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतयैव बोधकत्वमित्यर्थे मानमाह—**एतदेवेत्यादिना**। **त्रिप्रकार** इति। एकः उत्तरोत्तरं सम्बध्यते, यथाऽङ्गस्येत्यादि। अपरो यश्चकारेणानुषज्यते। अपरः परिभाषारूपः। अधिकारत्वञ्च विधिवाक्येन सह पदैकवाक्यतया बोधजनकत्वम्। न चाधिका-

पारार्थ्यात्परिभाषाप्युच्यते। कश्चित्परिभाषारूप इति कैयटः। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यम्। पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः। तत्रैतावान्विशेषः। यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तं 'क्ङिति च' इति सूत्रे कैयटे। यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत इति। कार्य्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्रैकदेशस्थ इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति। यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि

---

रविषयं भाष्यं परिभाषायां नोपयुज्यत इत्यत आह—**कश्चित्परिभाषारूप इति कैयट** इति। तथा च परिभाषाविषयमेव भाष्यमिति बोध्यम्। दीपो यथा स्वावयवप्रभासम्बद्धपदार्थप्रकाशकस्तथा परिभाषापि स्वावयवविधेयसम्बद्धमेव विधिशास्त्रमभिज्वलयतीत्यर्थ इति स्पष्टमेव दीपदृष्टान्तेन पदैकवाक्यता लभ्यते। वाक्यैकवाक्यतायान्त्ववयवसम्बन्धाभावाद्दृष्टान्तासङ्गतिः स्पष्टैवेति बोध्यम्। **एवं दीपवत्**। **एतत्** परिभाषारूपम्। **स्वबुद्धिजननद्वारेति**। स्वविधेयोपस्थितिद्वारेत्यर्थः।

नन्विदं भाष्यं कार्यकालपक्षाभिप्रायकमेव। तत्पक्षे पदैकवाक्यतायाः प्राचीनैरप्यङ्गीकारान्नैतद्भाष्यविरोधः **प्राचामिति** चेत्तत्राह-**एतच्चेति**। भाष्ये पक्षविशेषस्यानुपक्रमादिति भावः। **प्रदेशैकेति**। विध्येकेत्यर्थः। न तु विधिदेश एवेत्याग्रहः।

ननु पक्षद्वये पदैकवाक्यतायां को विशेषस्तयोरित्यत आह—**एतावानिति**। **परिकल्प्येति**। अस्य स्थितानामिति शेषः। अत एव क्त्वाप्रत्ययोपपत्तिः। **तैः** विधिसूत्रैस्सहेत्यर्थः। **कार्य्यकाले तु तत्तद्विधिप्रदेश इति**। तथा च **यथोद्देशे** परिभाषादेशे, **कार्यकाले** विधिदेशे, लक्ष्यसंस्कारको बोध इत्येतावन्मात्रं तयोर्भेद इति बोध्यम्। ननु **विधिदेशे** परिभाषाबुद्धौ परिभाषाया एकदेशस्थत्वानुपपत्तिरित्यत आह—**एकदेशस्थ इत्यनेनेति**। एकदेशस्थ इत्यस्य एकदेश उत्पन्न एवेत्यर्थः। **तत्तद्देश**-

**न तद्देशीयत्वव्यवहारः किं त्वभिजनदेशीयत्वव्यवहार एव तद्वत् । निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षित्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः 'क्ङिति चे'त्यत्र भाष्ये । तत्रैकवाक्यता पर्युदासन्यायेन । प्रसज्य प्रतिषेधे-**

---

**स्थत्वमित्यस्य** तत्तद्देशीयत्वमित्यर्थः । अत एव दृष्टान्ते **न तु तद्देशीयत्वे**त्येवोक्तम् । उत्पत्त्यधिकरणदेशस्यैव परत्वादिव्यवहारप्रयोजकतया परिभाषाया विधिदेशस्थितिमात्रेण तत्यभावाच्च **कस्यचिद्व्याख्यानान्तरन्तु** न युक्तमुक्तरीत्यैवोपपत्तौ क्लिष्टकल्पनाया अनौचित्याच्छब्दमर्य्यादयाऽलाभाच्चेत्यलम् ।

ननूक्तपक्षद्वयस्य संज्ञापरिभाषामात्रविषयकत्वेन 'क्ङिति चे'त्यत्र कार्य्यकालपक्षोपन्यासो भाष्यकृतां विरुध्येतेत्यत आह—**निषेधवाक्यानामित्यादि** । विध्युपकारकत्वमात्रेणारोपितं परिभाषात्वं तत्राप्यस्तीति भावः । क्ङितीत्यौपश्लेषिकसप्तमीत्वाद्भिन्नमित्यादौ दकारेण व्यवधानेपि गुणनिषेधोपपत्तये भाष्यकृतोऽयं यत्नः । **पर्य्युदासन्यायेनेति** । 'क्ङिति चे'त्यत्रानुवृत्तस्य नञो भेदार्थकत्वेन क्ङितः स्वप्रतियोगिकत्वसम्बन्धेन भेदे तस्य च स्वरूपसम्बन्धेन सार्वधातुकार्द्धधातुकपदार्थेऽन्वयः। क्ङित्प्रतियोगिकभेदविशिष्टसार्वधातुकार्द्धधातुकयोः परयोरित्यर्थ इति भावः। तथा च निरुक्तपदैकवाक्यतोपपद्यते। **पर्य्युदासन्यायेने**त्यस्य नञो भेदरूपपर्य्युदासाऽर्थत्वमिति युक्त्येत्यर्थः ।

ननु घटे न द्रव्ये इत्यादिवाक्याद्घटभिन्ने द्रव्य इत्यर्थाप्रतीतेरसमस्तनञा भेदबोधने प्रथमान्तप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारस्य कारणताया वक्तव्यतया प्रकृते प्रतियोग्यनुयोगिवाचकपदयोस्सप्तम्यन्तत्वेन भेदबोधकत्वं नञो न सम्भवतीत्याह—**प्रसज्य प्रतिषेधेपीति** । क्ङिति पर इको गुणो न भवतीति पृथगेव वाक्यार्थबोधः । पुगन्तलघूपधस्य चेत्यस्य समीपे प्रसज्य प्रतिषेधे यद्यपि वाक्यार्थद्वये गौरवं तथापि पर्य्युदासस्योक्तयुक्त्याऽसम्भवदुक्तिकत्वेनागत्या गौरवं स्वीकार्यमिति भावः । न च भिन्नमित्यादौ दकारेण व्यवधानात् कथं निषेध इति वाच्यम् । कार्य्यकालपक्षे प्रतिनिषेध्यशास्त्रं क्ङिति चेत्यस्य भिन्नतया पुगन्तलघूपधस्य चेत्यत्रोपस्थितस्य तस्य सामर्थ्यादेकवर्णव्यवधानेऽपि प्रवृत्तिस्वीकारेणादोषात् । न

